अनन्तशयनविश्वविद्यालयः

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १८०

# गोपिकोन्मादः






सम्पादकः

शूरनाड् कुञ्जन् पिळ्ळ, एम्. ए.,
पौरस्त्यग्रन्थप्रकाशनकार्यालयाध्यक्षः ।

अनन्तशयने एस्. वी. जी. मुद्रणालये मुद्रितः
१९५६ ११३२

मूल्यम् आणकाष्टकम्

तामित्युक्त्वा स तु निजतपोवैभवाद् वीतखेदां
निन्ये मार्गं प्रियतमकथां तत्र तत्र प्रशंसन् ॥ (stanza 39)

On the way, Nārada showed the Gopi several places which had become memorable for some exploit or other of Kṛṣṇa. Thus, the sage led the Gopi to Dvāraka.

मुग्धां मान्यः स मुनिरनयद् द्राक् पुरीं द्वारकाख्याम् (stanza 46)

The concluding portion of the poem is a beautiful description of Dvāraka abounding in allusions regarding the divinity of Kṛṣṇa.

The Gopikonmāda has the characteristics of a dramatic lyrical poem. It has an inner resemblance to the great Gīta Govinda of Jayadeva, but in form and technique both the poems have very little in common.

There are three manuscripts of this work in this Library Of these the first, No. 629 marked क, is complete and comes from Nāreri Mana (Kūḍallūr Mana). The second, No. 5219 marked ख, is also a complete manuscript and is obtained from Śrī. Govinda Piṣāroṭi, Vaikkam. The third, No 12557 marked ग, has been brought from Akavūr Mana. It is an incomplete manuscript. All the manuscripts are well preserved and are written in Malayāḷam script.

In the preparation of the edition of this work I have been assisted by the Curator Śrī. K. S Mahādeva Śāstri and Śrī V. Nārāyaṇan Nampūtiri, M. A., B. Sc., B. T., Pandit in this Library.

University Manuscripts
Library, Trivandrum.
18 - 12 - 1956

Śūranāḍ Kuñjan Pillai,
*Honorary Director.*

श्री

# गोपिकोन्मादः ।

वृन्दारण्ये विसृमरशरच्चन्द्रिकायां निशायां
गोपस्त्रीभिः कलमुरलिकानादसम्मोदिताभिः ।
रासक्रीडामधिकमधुरामादधानं युवानं
वन्दे मूर्ध्ना वलभिदुपलश्यामलाङ्गं मुकुन्दम् ॥ १ ॥

*अत्राश्चर्यं रसमभिनवं सेव्यशृङ्गारसारं
मान्यां मूर्तिं मुरविजयिनो मायिनो मूर्तिभेदान् ।
वेदान्तार्थं किमपि किमपि व्यज्यमानश्च मध्ये
काव्ये श्राव्ये शृणुत रसिका गोपिकोन्मादसंज्ञे ॥ २ ॥

काचिद् वृन्दावनपरिसरे गोकुलं चारयन्तं
पश्चादेत्य प्रकृतिमधुरं वंशमापूरयन्तम् ।
तन्नादेन श्रुतिसुरभिणा तिर्यगाकृष्यमाणा
कृष्णं क्रीडारसपरवशं पुष्पलावी ददर्श ॥ ३ ॥

चित्रं कश्चिन्मरतकगिरिः कालमेघोऽप्यमुष्मिन्
वाप्यावत्र श्रितकुवलये द्वाविहैवेन्द्रचापौ ।
अस्मिन्नम्भोरुहमिदमितो मौक्तिका विद्रुमोऽत्था
स्तम्भाश्चासन्निह मणिमयाः सेति दृष्ट्वा तदाभूत् ॥ ४ ॥

---

१ विलसित , २. वेदान्तार्थान् किमपि किमपि. क. ग. ३ कालमेघो-
ऽयमुष्मिन् , ४. ऐन्द्रचापौ. क. ५. विद्रुमोऽसौ. ख.

---

* पद्यमिदं क. मातृकायां न दृश्यते ।

पादावेतौ प्रतिनवलसत्[1]पद्मरागप्रकाशा-
वाकारश्रीभिरयतितरामिन्द्रनीलस्य लक्ष्मीम् ।
वक्षो[2]मध्ये किमपि ललितं लक्ष्म भिन्नाञ्जनाभं
कोऽयं दिव्यः पुरुष इति सा तर्कयामास तन्वी ॥ ५ ॥

इन्द्रो नेत्रैरुपचिततनुः[3] सोऽपि चन्द्रः कलङ्की
बीभत्साङ्गस्त्रिणयनसम्वः कामदेवस्त्वनङ्गः ।
भूमेर्भारं परिलघयितुं नन्दगोपस्य गेहे
जातः साक्षात् परमपुरुषः सोऽयमित्येव मेने ॥ ६ ॥

*व्यत्यस्ताङ्घ्रिं वलितवदनं वान्तवेणीकलापं
लोलापाङ्गं ललितमुरलीकुड्मलीभावितोष्ठम् ।
वीतं पीताम्बरममलया मालया वैजयन्त्या
बर्हापीडं प्रणयभरिता प्रैक्षतापादचूडम् ॥ ७ ॥

पादावेतौ स खलु शकटो जङ्घिके याजुनौ तौ
मध्योऽयं सा सुरभरशना वक्ष एतद् वृषः सः ।
बाहु[4]श्चायं स पुनरचलो वक्त्रमेतज्जगत्[5] तद्
बाल[6]स्सोऽयं स तु विषधरः सेत्यभूद् विस्मितान्तः ॥ ८ ॥

उद्यद्रागं पदकमलयोरुन्नतं श्रोणिबिम्बे
मध्ये क्लान्तं वलिषु तरलं नाभिगर्ते निमग्नम् ।
व्याप्तं वक्षस्यधिकविपुले वक्त्रपद्मे प्रसन्नं
तत्सारूप्यं प्रणतजनवत् प्राप नेत्रं तरुण्याः ॥ ९ ॥

---

१. फलत्. ख. २. वक्षोदेशे किमपि ललितालिप्तकाश्मीरगौरम्. ख. ३. वपुः. क. ४. बाहुस्सोऽयं. ख. ५. जगच्च. ग. ६. बालश्चायं. क.

---

* पद्यमिदं क. मातृकायां न दृश्यते ।

दृष्टे दृष्टे नयनसुभगे नन्दगोपस्य सूनौ
गाढारूढप्रणयविवशा गोपकन्या तदानीम् ।
मन्दं मन्दं मदनविशिखैरन्तरन्तः प्रविष्टै-
र्भूयोभूयः क्षुभितहृदया भावभेदं प्रपेदे ॥ १० ॥

स्रस्तौ बन्धाद् वसनचिकुरौ न ह्यशक्नोन्निरोद्धुं
नैवाविन्दद् वलयरशनाहारमञ्जीरमोक्षम् ।
आकृष्टु सा नयनमनसी नालमस्मिन्निमग्ने
नाङ्गेऽप्यासीदहमिति ममेत्येवमस्याः प्रतीतिः ॥ ११ ॥

मा विश्लेषोऽस्त्विति सहचरं चेतसा किं प्रविष्टा
ध्यानारूढा किमुत किमियं मूर्च्छिता किं निरुद्धा ।
किं वा सुप्ता किमु विलिखिता वेत्त शङ्कां दिशन्ती
संस्तब्धाङ्गी सपदि सुतनुः सालभञ्जीव तस्थौ ॥ १२ ॥

सिक्ता स्वेदैः श्वसिततरळा प्रस्फुरत्पल्लवोष्ठी
जृम्भारम्भस्तबकितकुचा जातरोमाङ्कुरश्रीः ।
व्रीळानम्रा विकसितमुखी मीलिताक्षिद्विरेफा
वल्लीवासीदुपवनतले माधवे वीक्ष्यमाणे ॥ १३ ॥

सद्यः पक्वं सुचरितफलं सुप्रभातं दिनं मे
वामं नेत्रं स्फुरति बहुशश्चित्तमास्ते प्रसन्नम् ।
कूजन्त्येते श्रवणसुभगं पक्षिणो दक्षभागे
प्रायेणास्मान् विधिरभिमतं प्रापयेदित्यमंस्त ॥ १४ ॥

---

१. बन्धुं , २. सं. , ३. चेत क. ४. वामक्षाणे. ख. ग. श्रवणसुभगाः. क.

निश्चित्यान्तः कथमपि चिरादत्र कर्तव्यमर्थं
भक्तिव्याजादवनततनुः पादमूले मुरारेः ।
वामाक्षी तत्क्षणमपचितं विक्षिपन्ती प्रसूनं
प्राप्ता सद्यः स्मरपरवशा पङ्कजाक्षस्य पार्श्वम् ॥ १५ ॥

वैदग्धीनां स खलु वसतिः फुल्लकल्हारहृद्यैः
प्रेमार्द्रार्द्रैः प्रणयविवशां भूषयन्नक्षिपातैः ।
वाचा मन्दस्मितमधुरया माधवो मञ्जुवाणीं
स्वैरालापैश्चिरमरमयत् सादरं कातराक्षीम् ॥ १६ ॥

पुष्पैरेभिश्चिरमपचितैर्भूयसा सम्भृतां ते
कान्ते! श्रान्तिं परिहर लतामण्डपेऽस्मिन् विशाले ।
का त्वं ब्रूयाः किमिह विपिने कस्य वा वल्लभासी-
त्येवंप्रायैः प्रणयवचनैः स्वे वशे तां चकार ॥ १७ ॥

कन्यां विद्धि व्रजकुलभवां कान्त! मां भावनाख्यां
यष्टुं देवं रुचिरवरदं[1] काममारामभाप्ताम् ।
आविर्भूतस्त्वमपि भगवन्नात्मयोनेऽन्तरात्मन्!
मथ्नन् पञ्चायुध झटिति मां मन्मथेत्येनमूचे ॥ १८ ॥

हासालापप्रणयकलहैः[2] प्रेक्षणालिङ्गनाद्यैः
स्वेच्छाभोगैः स्वरसमधुरां मानिनीं मानयित्वा ।
भावं ज्ञातुं जगति सुभगा साहमेकेति जातं
मानं चास्या दलयितुमथो माधवोऽयं तिरोऽगात्[3] ॥ १९ ॥

---

१ रुचिरवरदं. ख. २. कलहप्रेक्षण. ख. ग. ३. तिरोऽधात्. क.

हा हा कान्त प्रियसहचर प्राणनाथेत्यनाथा
विक्षिप्याक्षिद्वितयमलसा दिक्षु निर्लक्षमेव ।
रोदंरोदं रमण रमणेत्याह्वयन्ती समस्तं
तत्रापश्यच्चरमचरमप्यङ्गना कृष्णमेव ॥ २० ॥

किंस्वित् स्वप्नः किमुत मनसो विभ्रमोऽथेन्द्रजालः
किं वा मया किमु समधृतः कृष्णरूपैव सृष्टः ।
अस्मद्भाग्यं परिणतमथो सर्वतः कृष्णरूपं
मुग्धा मूर्च्छां मुहुरिति गता वञ्चिता माधवेन ॥ २१ ॥

आलोक्यान्तः परमपुरुषं मीलिताक्षी तदा सा
मा गच्छ त्वं पुनरपि शठेत्यञ्जसा तर्जयन्ती ।
यद्वन्माता हृदयकमले कर्णिकोलूखले तं
बन्धच्छेदे निपुणमबला प्रेमदाम्ना बबन्ध ॥ २२ ॥

कान्त! स्वैरं विहर सुचिरं पूतनायाः स्तनान्ते
कण्ठाश्लेषं कुरु बकतृणावर्तवत्सासुराणाम् ।
केशग्राहं विरचय पुनः केशिनः केशव त्वं
मुग्धा मुञ्चेत्यलपदबला माधवं स्वप्नदृष्टे ॥ २३ ॥

आलीवर्गैर्द्रुतमुपगतैरञ्जसा बोधयित्वा
किं ते जातं सुमुखि कथयेत्याकुलैः पृच्छ्यमाना ।
प्रत्याचष्ट प्रियतमकृतं तच्चरित्रं विचित्रं
व्रीळां मुक्त्वा विवशहृदया गद्गदोत्सन्नकण्ठी ॥ २४ ॥

आकृष्यादौ मधुरमुरलीनादमन्त्रेण चित्तं
रूपं सिद्धाञ्जनमिव वशीकारि मे दर्शयित्वा ।
आद्यः सिद्धो निजकुहनया मोहयामास मुग्धां
विद्युद्वल्लीविलसितमिदं विक्लबा किं ब्रवीमि ॥ २५ ॥

एकोऽप्यासीत् सुरनरचरस्थावराद्यात्मभेदैः
व्याप्तः सोऽन्तर्बहिरपि सहस्राक्षिशीर्षाङ्घ्रिबाहुः ।
व्यक्ताव्यक्तं गुणमहदहङ्कारभूतेन्द्रियाद्यं
स्थूलं सूक्ष्मं जगदिदमथो दर्शयामास देहे ॥ २६ ॥

ब्रह्मा भूत्वा भुवनमसृजद् दिङ्मुखो वेदगर्भो
वैकुण्ठः संस्तदवनमधात् सेव्यादिव्यावतारैः ।
नीलग्रीवः सपुनरभवन्नेत्रनिर्दग्धविश्वः
किं किं नाभूत् स खलु विमलः सन्ततानन्दरूपः ॥ २७ ॥

तद्भूमानं कथयितुमलं नैव वाचां विलासो
ध्यातुं चाथो विविधविषयाभोगपारिप्लवा धीः ।
द्रष्टुं दृष्टिश्चिरमवयवे तत्र तत्र भ्रमन्ती
सा चेद् भूयादनुभवकला शक्यते ज्ञातुमेनम् ॥ २८ ॥

मन्दाकिन्यां कृतविहरणो मामुपश्लोक्य पूर्वं
दिव्यैर्माल्याभरणवसनालेपनैर्मण्डयित्वा ।
ऐन्द्रैर्भोगैरयमरमयन्नन्दनोद्यानमध्ये
नानाभोगैर्दिवि भुवि तथा नागलोके च दीर्घम् ॥ २९ ॥

---

१. गुणमयमह. क. २. महो. ख. ग. ३ ३. पुनरमल.., ४. संविदाचन्दरूपः. क. ५. गणयितुम. , ६. विलासाः. ख. ग. ७. उपश्लोक्य. क.

सङ्गे सङ्गे मृदुनखपदं लेखयित्वा लिखित्वा
मध्ये मध्ये मधुरमधरं पाययित्वा च पीत्वा ।
आलिङ्ग्यालिङ्गनपरवशामित्यथार्धोक्तिमध्ये
स्मारं स्मारं सुरतचरितं तत्र मूर्च्छामगच्छत् ॥ ३० ॥

कृत्वा सख्यः किमपि शिशिरं मण्डपं चन्द्रकान्तै-
र्ज्योत्स्नासङ्गद्रुतजलकणस्पर्धिमुक्तावलम्बम् ।
तां संविष्टां नवकिसलयैः कल्पिते तत्र तल्पे
शेकुर्नाश्वासयितुमलमा हन्त शैत्योपचारैः ॥ ३१ ॥

जज्वालान्तर्बिसकिसलयैर्वीजितायाः स्मराग्निः
तस्यैवास्या वपुषि निहितं जातमिध्मं मृणालम् ।
लेपः पङ्कोऽहिमजललवस्यन्दिभिश्चन्दनानां
तिग्माङ्गारोपरि परिणमत्सोष्मभस्मोपमोऽभूत् ॥ ३२ ॥

आश्वासार्थं तदनु सुतनोर्वक्तुमारेभिरेऽस्याः
सख्यस्तस्य प्रकृतिगहनं पुण्यकीर्तेश्चरित्रम् ।
मुग्धे मुञ्च क्षणिकसुहृदि प्रेमबन्धं त्वमस्मिन्
यं नाद्राक्षीच्चिरमुपनिषद्योषिदन्विष्य गूढम् ॥ ३३ ॥

सोऽयं कृष्णः सखि! बदरिकामेत्य नारायणात्मा
योगारूढो नियतकरणश्चालितो नाप्सरोभिः ।
ऊरोस्ताभ्योऽप्यधिकललितामुर्वशीं निर्ममे यो
मुग्धे! बुद्धिं भ्रमयसि मुधा मुक्तसङ्गे मुकुन्दे ॥ ३४ ॥

---

१. सङ्गद्रुतमदजल. ख. २. ताः संपिष्टैर्न. क. ३. विगतकरुणः. ख.

रामो भूत्वा रणभुवि पुरा रावणं दारयित्वा
प्रत्यानीतां[1] प्रकृतिकुटिलः किंवदन्तीं प्रमाण्य ।
अग्नौ शुद्धामखिलजननीं जानकीं यस्त्वमुञ्च-[2]
न्निन्द्ये तस्मिन् रमयसि मनो निर्घृणे हन्त कृष्णे ॥ ३५ ॥

निक्षिप्याङ्के निजमथ कुचं पाययन्तीं स्वधात्रीं
व्यालुम्पन्तीं व्रजकुलवधूवर्गसौभाग्यगर्वम् ।
प्राणैर्हीनामकुरुत पुरा पूतनां यस्तु बाल्ये
क्रूरे तस्मिन् किमिति कुरुषे केशवे स्नेहपाशम् ॥ ३६ ॥

सा प्रत्यूचे सरसवचना सोपहासं[3] सखीस्ताः
लक्ष्मीर्यस्य स्फुरति हृदये वीतरागः कथं सः ।
यल्लाभार्थं जलधिमथने प्रस्तुते तं गरिष्ठं
पृष्ठे मायाकमठवपुषा मन्दराद्रिं दधार ॥ ३७ ॥

पत्नी यस्याः प्रतिकृतिरभूदस्य[4] तत्राश्वमेधे
रामोऽमुञ्चज्जनकतनयामेकदारव्रतस्थः[5] ।
सीतास्नेहो[6] यदि न विदितः सेतुमैक्षध्वमब्धौ
यस्मिन् दृष्टे न भवति पुनर्गर्भवासो जनन्याः ॥ ३८ ॥

तन्मे चित्तं मदयति मुहुः सत्यमालोच्यमाने
पातुं बालानदयमधयत् पूतनासूनसौ यत् ।
कृष्णं वक्तुं क्षणिकसुहृदं कैः सदा मे हृदिस्थं
वृध्वं बुद्धैः[7] सुनिगमरहः[8] सम्यगध्यापितं वः ॥ ३९ ॥

१. नीतां सद्यः. ख. २. स्त्वानिन्द्यां मीन्ये तस्मिन्. क. ३. सापहासा. ग. ४. अस्य. ग., यस्य तस्य. क. ५. रामोमुञ्चेत् क. ख. ६. वीतस्नेहः. क. ७. बुद्धयै. क. ८. स्वानगमरहः. क.

सङ्ग[1]स्त्यक्तः स्वजनविषये[2] यस्य सङ्गाय सोऽयं
सख्यश्चिन्तामय इह पुरः सर्वतो विष्णुरास्ते ।
आनन्दात्मा रमयति परप्रेमभारास्पदो मा-
मित्थं पश्यत्युपनिषदमुं मद्वद[3]न्विष्य गूढम् ॥ ४० ॥

आस्ते साकं स्वपिति हसति क्रीडति स्नाति भुङ्क्ते
यद्यत् कुर्यामयमपि तदा तत्तदङ्गीकरोति ।
सर्वावस्थास्वपि वितनुते साहचर्यं समेतो
नैवासक्तां विरह[4]यति मां नाचरत्यप्रियं वा ॥ ४१ ॥

नैनं लक्ष्मीर्वशयति न भूः नैव गोप्यो मदन्या
न व्यापारं रचयति महीभारनाशाय किं वा ।
गोभिः साकं विहरति पुनर्न क्षणं मद्वियुक्तो
मामेवासामभिमुखगता[6]मीक्षते सर्वदापि ॥ ४२ ॥

आदायासौ वसनमधुना स्नानकाले मदीयं
कुन्दारूढः परिहसति मां पश्यताग्रे मुकुन्दः ।
मुग्धा बद्धाञ्जलिरिति पुरः कृष्णमाकाशलक्ष्मा[7]
सा पश्यन्त्याः सखिपरिषदः क्षौममेनं ययाचे ॥ ४३ ॥

मा मां सिञ्च प्रियतम[9] चिरस्नानसञ्जातशैत्यां
त्वं चात्यन्तप्लवनतरलो लक्ष्यसे वेल्लदङ्गः ।
श्वासान् दीर्घान् विसृजसि मुहुः कान्त! रोहाव तीरं
सेति स्वान्तर्ज्वलितमदना मत्तकाशिन्यशंसत् ॥ ४४ ॥

१. सङ्गं त्यक्त्वा. , २. षयं. , ३. मुग्धमन्विष्य. क ४. विरचयति. ख. ग
घ. , ६. तो वीक्षते. क. ७. माकाशलक्ष्मं. ख. ८. मां. ग. ९. प्रियसहचर. ख. ग.

श्रुत्वा नादं श्रवणसुभगं मत्तपुंस्कोकिलानां
कृष्णो मामाह्वयति मधुरं श्लक्ष्णयासौ गिरेति ।
सा विश्लिष्यद्वलयरशनानूपुराग्रे सखीनां
रोधं रोधं चिकुरवसने मुक्तलज्जा चचाल ॥ ४५ ॥

शाखाबाहान्[1] शिखरविलसत्पुष्पचक्राभिरामा-
नुच्चैः कूजच्छुककुलकलालापवंशीनिनादान् ।
श्लक्ष्णस्निग्धैर्नयनसुभगैः श्यामलाङ्गान् पलाशै-
र्वृक्षान् लक्ष्मीसहचरधिया विह्वलाक्षी ददर्श ॥ ४६ ॥

लक्ष्म्यावासा ललितवनमालोपगूढोपकण्ठा
नद्धाश्शीर्षे नटनगळितैः केकिनां पिञ्छभारैः ।
वंशैः क्षुण्णैर्मृदुलपवनापूर्यमाणैर्नदद्भि-
स्तन्वीं शैलास्तरलहृदयां हर्षयामासुरग्रे ॥ ४७ ॥

श्यामच्छायारुचिरममलैर्भूषितं रत्नजालै-
रौर्व[2]ज्वालाकपिशवसनं व्याप्तदिक्चक्रवाळम् ।
सत्त्वैरन्तः किल विलसितैर्विश्वरूपं दधानं
पारावारं परमपुरुषोत्प्रेक्षया सा प्रपेदे ॥ ४८ ॥

कान्तारान्तः कलुषहृदया कान्तमन्विष्य यान्ती
यूथभ्रश्यत्तरुणहरिणीप्रेक्षणा सा तदानीम् ।
वाचां गुम्फैरधिकमधुरैर्लक्ष्यशून्यैः सदैन्यं
निस्सम्बन्धं व्यलपदशनैरङ्गनानङ्गतप्ता ॥ ४९ ॥

---

१. शाखाबाहं. ग. २. रौर्वश्छाया. ख. ग.

धन्यासि त्वं सखि मुरलिके! तुङ्गवंशप्रसूता
विष्णोः पाणिग्रहणविधिना प्राप्तसौभाग्यगर्वा ।
पश्यन्तीनामपि च पुरतो वल्लवीनां प्रकामं
*गायं गायं पिबसि मधुरं तस्य बिम्बाधरोष्ठम् ॥ ५० ॥

माध्वीपूर्णा मुरविजयिनो मालिका वैजयन्ती
लक्ष्म्या साकं लसतु हृदये पुष्पवत्यप्यजस्रम् ।
यस्तां धत्ते[1] बहलरजसं वीतलज्जं धिगेनं
कामान्धानां चपलमनसां निर्विवेकं हि चित्तम् ॥ ५१ ॥

कार्श्यं धत्से वपुषि दिनशो भूयसा पाण्डुराङ्गी[2]
न व्यापारं कमपि[3] कुरुषे दुस्सहोऽयं तवोष्मा ।
त्वत्संसर्गे विसकिसलया म्लानिमानं भजन्ते
किं कृष्णेन त्वमपि ललिते![4] वञ्चिता चन्द्रलेखे! ॥ ५२ ॥

कान्तारेऽस्मिन् गमयसि निशां नित्यमेकाकिनी त्वं
सत्यं ब्रूहि प्रियसखि![5] मम त्वत्समानव्रतायाः ।
कस्माद्भूतोर्व्यसनहृदया क्रौञ्चिके! क्रोशसीत्थं
चिन्तामस्मिन् विरचयसि किं चित्तचोरे किशोरे ॥ ५३ ॥

पूर्णं भाग्यं बकि सखि! रहस्तीरमासाद्य नद्या
ध्यायन्त्यास्ते परमपुरुषस्याद्यमत्रावतारम् ।
मौनग्रन्थिर्नहि विरमते पाण्डरीभूतगात्र्याः
किं वा कुर्वः कितवचरितं मानयन्त्यौ वनान्ते ॥ ५४ ॥

* 'पायं पायं नदसि' पाठान्तरम् ।

१. धत्ते. ग. २. पाण्डराङ्गी. क. ३. किमपि. ख. ४. ललिता. क. ५. प्रियसखि. ख. ग.

मा त्वं भृङ्ग! स्पृश पदमिदं मत्सपत्नीजनानां
कण्ठाश्लेषे कुचविलुलितैः कुङ्कुमैः पङ्किलास्यः ।
बिभ्रन्मालामुखविगलितां धूळिमस्यैव योग्यां
दूरं स्थित्वा कथय वचनं दूतकृत्ये स्थितश्चेत् ॥ ५५ ॥

सल्लापार्थं मम कळपदां कर्णपीयूषधारां
लक्ष्मीभर्तुः कथयसि कथां शारिके! स्वागतं ते ।
एह्येह्यस्मद्भवनवलभीं तत्र सम्भाव्यसे त्वं
सम्यक्पक्वैररुणधवळैर्दाडिमीबीजपूरैः ॥ ५६ ॥

वंशीनादैस्तव विरचयन् सौम्य सङ्गीतसख्यं
धूर्तो नृत्तभ्रमणगळितं बर्हमादातुकामः ।
आपीडार्थं किमुत गतवानन्तिकं ते कलापिन्!
मह्यं ब्रूया मधुरनिनदैर्मेघवर्णो मुकुन्दः ॥ ५७ ॥

चञ्च्वौ बिभ्रद् मम तनुगतं म्लानमेतन्मृणाळं
दौत्यं कर्तुं मयि करुणया सज्जसे चेन्मराळ! ।
तूष्णींभूतो विनतवदनास्तिष्ठ विष्णोः पुरस्तात्
पाण्डुस्तेऽङ्गं प्रथयितुमलं मन्मनःखेदमस्मै ॥ ५८ ॥

इत्थं तिर्यग्जनमपि शुचा द्रावयन्तीं नितान्तं
तामाकाशप्रणिहितभुजां तत्समालिङ्गनोत्काम् ।
स्मृत्वा स्मृत्वा रमणमनिशं कृष्ण कृष्णेत्युशन्तीं
प्रत्याचख्युः सजलनयनाः पार्श्वमागत्य सख्यः ॥ ५९ ॥

१. विलुळितां., २. स्वैरं भर्तुः. क. ३. किमुप., ४. शरणं. ख. ग.

मा व्यामुह्य द्युमणिरबले चक्रपाणेर्न चक्रं
बिम्बः सोऽयं सुमुखि शशिनो न त्वसौ पाञ्चजन्यः ।
एषा सन्ध्याजलदपटली नैव पीताम्बरश्री-
राकाशोऽयं न तु मुररिपोर्मेचका मूर्तिरेषा ॥ ६० ॥

बाले! बालातपरुचिरियं नो हारिद्रादुकूलं
धारा धातोः स्फुरति न पुनः कौस्तुभाभाप्ररोहः ।
एषा मुग्धे! नवतमतमालावली नैव कान्तिः
शैलः सोऽयं तरळनयने नैव लक्ष्मीनिवासः ॥ ६१ ॥

मुग्धामेनां न खलु दयसे नाथ! नारायण! त्वं
सा ते क्वास्ते कथय करुणा [1]श्रीगजेन्द्रस्य मोक्षे ।
[2]आरुह्याशु प्र[3]जवगरुडस्कन्धमादाय चक्रं
यातो लक्ष्म्या सह च सरसीं यद्वशे [4]वर्तमानः ॥ ६२ ॥

अस्यां काञ्चिद् रचय करुणां तावकीं विश्वमूर्ते!
यत्संश्लेषाद् विरचितमहानारसिंहाकृतिस्त्वम् ।
भित्त्वा स्तम्भं झटिति युगपत् तद्धिरण्यस्य वक्षः
प्रह्लादस्य प्रणयमधिकं मानयन् प्रादुरासीः ॥ ६३ ॥

उद्धर्तुं नः प्रियसहचरीमाधिसिन्धौ निमग्नां
नैवोद्युङ्क्षे किमिति निखिलत्राणद[5]त्तक्षणोऽपि ।
क्षोणीमेतां प्रलयजलधौ गाढमग्नां पुरा यो
दंष्ट्राग्रेण द्रुतमुद[6]धरः क्रीडया क्रोडरूपी

१. दिग्गजेन्द्रस्य. ग. २. आरुह्याग्रे. क. ३. कट. , ४. वर्तमाने. ख ग.
५. दत्तेक्षणोऽपि. ख. ६. उदहरः. क- ग.

भूत्वा योऽग्रे भृगुकुलपतिर्मातुरार्तस्वरायाः
श्रुत्वाक्रोशं पतिनिधनतः ताडयन्त्याः स्तनौ स्वौ
बिभ्रत् तीक्ष्णं परशुमकरोर्वीर निःक्षत्रियां क्ष्मां
स त्वं सख्यै कुरु तव कृपामेहि कृष्ण! प्रसीद ॥ ६५ ॥

*तासां वाक्यैर्द्विगुणितपतिप्रेमसम्भ्रान्तचित्ता
सा तर्जन्या किसलयरुचा विक्षिपन्ती तदोर्ध्वम् ।
आयात्येष प्रिय इह पुरः पश्यताकाशमार्गे
बाला पश्चादिति सहचरीः प्रत्युवाच प्रहृष्टा ॥ ६६ ॥

विद्युद्वल्लीवलयवितती जातपीताम्बराशा
बर्हापीडं सुतनुरभिसन्धाय माहेन्द्रचापम् ।
मत्वा साक्षात् परमपुरुषं मानिनी काळमेघं
याथातथ्ये तदनु विदिते सा सलज्जा रुरोद ॥ ६७ ॥

पश्चादूचे प्रियसखि! कुतः क्रन्दसे मुक्तकण्ठं
किं ते कान्तिं कथय कितवो मेघमाले! मुमोष[1] ।
गाढोत्कण्ठाकुलितहृदया बाष्पधारासहस्रैः[2]
क्षोणीं सिञ्चत्यनुकलमहो दुस्त्यजो निःस्पृहोऽसौ[3] ॥ ६८ ॥

इति प्रथमोन्मादः ॥

## अथ द्वितीयोन्मादः ।

कालिन्द्योघैरिव वरतनुं कान्तिपूरैर्निषिञ्चन्
कण्ठे मालामिव कुवलयैर्निक्षिपन्नक्षिपातैः ।
ज्योत्स्नागौरस्मितलहरिभिश्चन्दनेनेव लिम्प-
न्नाविर्भूतः सकलजगतामुत्सवो वासुदेवः ॥ १ ॥

* ६६, ६७ पद्ये कपाठे एव दृश्येते ।

१. मुमोच. ग. २. मथो. , ३. निःस्पृहो वा. क.

वामाङ्गी सा विकसदतसीगुच्छसच्छायकायं
भाग्योत्कर्षात् परमपुरुषं प्रेक्षमाणापि साक्षात् ।
मेने मुग्धा मदनशिखिना तप्यमानातिमात्रं
व्यामोहाय प्रसरति पुरो वासना मानसीति ॥ २ ॥

सोऽयं कृष्णः सहजकरुणापूर्यमाणान्तरात्मा
बाष्पक्लिन्ने [1]किसलयरुचा पाणिनोन्मृज्य नेत्रे ।
आलिङ्ग्यैनामलसनयनां मांसलाभ्यां भुजाभ्यां
क्षीणां पश्चादनुनयपदैः प्रीणयन् सल्ललाप ॥ ३ ॥

अश्रान्तं गोनियमनपरानग्रजाधीनवृत्तीन्
मा शोचास्मान् पथि विचरतो नित्यमारण्यकानाम् ।
येषां सङ्गः क्वचिदुपनमेद्वा न वा दैवयोगात्
कर्माधीने कथमिव जने तादृशं भागधेयम् ॥ ४ ॥

धन्यास्तेऽन्ये विपुलविषयाभोगसञ्जातहर्षा
ये सम्मोहं सुमुखि! दधते त्वादृशां मानिनीनाम् ।
नित्यं निष्किञ्चनजनवशे वर्तमानाः कथञ्चित्
तेषां के वा गुणवति वयं निर्गुणा निर्विशेषाः ॥ ५ ॥

ईषन्मात्रोऽप्यलसनयने! नावयोरस्ति भेदः
त्वय्येवाहं त्वमपि च मयीत्यञ्जसा मां प्रतार्य ।
अप्रत्यक्षस्त्वमपि दयित! त्यक्तसङ्गो निरीहो
मुग्धाहं त्वां न विदितवती मायिनं मानहीनम् ॥

१. कमलरुचिना. क.

गूढं दारुष्विव हुतवहं व्यक्तमव्यक्तमार्गं
  त्वामन्विष्य श्रममुपगता त्वं निरस्तेषणोऽभूः ।
क्रीडस्येवं तव कुहनया वञ्चयित्वा प्रपञ्चं
  कार्पण्योक्तीरिति कृतवती सा[1]थ याथार्थ्यहृद्याः ॥ ७

प्राश्वाश्वासा प्रियतमवचोहृद्यपीयूषवर्षैः
  त्यक्तुं तापं सुचिरविरहाद् भूयसैवोष्मळे स्वे ।
त[2]व्याधत्त स्तनगिरितटे पावनं पादपद्मं
  येनाक्रान्तं त्रिभुवनमिदं मा[3]यिना वामनेन ॥ ८ ॥

खेदं सद्यश्चिरविरहजं सा जहौ सन्नताङ्गी
  पुण्यैर्विष्णोः पदकमलजैः पांसुभिर्भाग्यलभ्यैः ।
कल्याणीं स्वां प्रकृतिमभजत् प्रागहल्योत्तमस्त्री
  यत्सम्पर्कान्मुनिवरगिरा सा शिलीभूतदेहा ॥ ९ ॥

कण्ठाश्लेषं व्यतनुत मुहुश्चुम्बति स्माधरोष्ठं
  मौलौ वक्त्रं स्तनकलशयोस्तत्कराम्भोजमाधात् ।
व्यामृद्नात् तच्चरणकमलं वीजयामास व[4]क्त्रं
  त[5]त्ताम्बूलं समुपयुयुजे चिक्षिपेऽङ्गेषु शेषम् ॥ १० ॥

रासक्रीडामकुरुत मिथो गायति [6]स्मास्य गाथाः
  स्वैरं तोये व्यहरदमुना से[7]चनास्फालनाभ्याम् ।
बध्वा काञ्च्या प्रणयकलहे ताडयामास दाम्ना
  क्रुद्धापश्यत् कुटिलनयना [8]भर्त्सयामास वाचा ॥ ११

१. सा यथार्थाथहृद्याः. ख. ग. २. तद्व्याधत्त. क. ३. मानिना. ग. ४. बीजयामास गात्रं, ५. स्वक्ताम्बूले., ६. स्मार्यगाथाः. क ७. सेवन., ८. भस्मयामास. ग.

अक्रूराख्यो यदुपतिरथो घोषयन् घोषमध्ये
मान्यं धन्वोत्सवमभिनवं प्रस्तुतं कंसगेहे ।
गोपैः साकं शकटविधृतोपायनैर्नन्दमुख्यै-
र्जातोत्कण्ठः[१] सपदि मधुरां रामकृष्णौ निनाय ॥ १२ ॥

तां विश्लिष्टां तदनु विधिना चक्रवाकीमिवैकां
रिक्तेऽरण्ये रणरणिकया क्रन्दमानां मुकुन्दम् ।
तिर्यञ्चोऽन्वग् रुरुदुरदयं तत्र रात्रिष्वजस्रं
बाष्पस्रावं हिमजलमयं पादपाश्च व्यमुञ्चन् ॥ १३ ॥

तत्प्राणा तन्निहितकरणा तत्सुहृत्तच्छरण्या
तद्भावा तद्गतविलसिता तन्मयी तच्चरित्रा ।
तन्निध्याना तदितरपरिज्ञानशून्या तदीशा
तन्वी तस्मिन् व्रजपरिसरे सेति चुक्रोश दीना ॥ १४ ॥

आभीराणां किमयमपरः कश्चिदास्ते निवासः
कालिन्द्याख्या किमियमपरा स्यन्दते कापि कुल्या ।
एताश्चान्याः किमु सुरभयः क्रीडते नात्र कृष्णो
या जीवामि प्रियविरहिता सा किमन्याहमस्मि ॥ १५ ॥

बर्हौ दृष्टी नयनसुभगं पश्यतो ये न कृष्णं
पर्णं जिह्वा पिबति न पुनर्यास्य बिम्बाधरोष्ठम् ।
गर्तौ कर्णौ न खलु शृणुतो यौ न वेणोर्निनादं
नूनं हस्तावपि च विटपौ यौ तु नालिङ्गतस्तम् ॥ १६ ॥

१, जातोत्कण्ठां क.

तत्तारुण्यं तदपि तरळं वीक्षितं तान् विलासां-
स्तान्[1] सल्लापांस्तदपि हसितं तद्वपुस्ताश्च गोष्ठीम् ।
तान् वा भावांस्तदपि च गतं ताश्च लावण्यवीचीं
प्रेक्षिष्येऽहं पुनरपि कदा देवतानां प्रसादात् ॥ १७

स्फूर्जद्वेणुध्वनिसमुदितैर्नर्मगोष्ठीप्रबन्धै-
र्मां प्रक्रान्तप्रणयकलहां हासयन्तं हसन्तम् ।
याचे युष्मानुपवनगता देवता ब्रूत मह्यं
प्रेक्षिष्ये[2] किं पुनरपि विभुं वल्लवीभागधेयम् ॥ १८ ॥

घोरे गौर्यास्तपसि विरते त्र्यम्बके सम्प्रयुक्ते
वैकुण्ठेऽपि प्रकटय विभो वीर्यमव्याहतं ते ।
मान्यामोदैर्बकुलकुसुमैर्मन्मथाराध्य त्वां
मा विश्लिष्या मरतकशिलाश्यामलांगेन पुंसा ॥ १९ ॥

संसारेऽस्मिन् कथमपि गमये नैव पश्यामि सारं
शून्यं मन्ये जगदिदममुना तं विना मानसं मे ।
आभात्यन्धं तम इव जगत् कान्तकुन्देन्दुबिम्बं
जीर्णारण्यप्रतिममधुना भाति वृन्दावनं च ॥ २० ॥

हा कालिन्दि ! त्वमपि सहसे विप्रयोगं मुरारेः
सेकास्फालप्लवनपतनोन्मज्जनाद्यैर्[3]मनोज्ञैः ।
क्रीडाभेदैः सुचिरममुना लाल्यमाना पुरस्ता-
च्छेषाधूळीकपिशसलिला या तदा वीक्षिताभूः ॥ २१ ॥

१. सल्लापान् ख. ग. २. वीक्षिष्येऽहं ग. ३. मज्जनामज्जनाद्यैः ख. ग.

अक्रूराख्यां वहति भुवने कोऽप्य[1]तिक्रूरकर्मा
वात्यां मन्दानिल इति मृथा व्याहरन्ति प्रमत्ताः ।
ज्योत्स्नाज्वालाज्वलितभुवनं पावकं शीतरश्मिं
मुग्धो लोको वदति कुपितं मूर्ध्नि मालेति सर्पम् ॥ २२ ॥

दावाग्निं यः प्रसभमहरत् प्राग् व्रजत्राणहेतोः
कामाग्निं मे ज्वलयसि कुतः साम्प्रतं दूरगोऽपि[2] ।
रिक्तां दृष्टिं रमय दयित ! प्रागिहागत्य कृष्ण !
त्वद्विश्लेषे सति च कठिनं न द्रुतं धिङ् मनो मे ॥ २३ ॥

जाने चित्तं मम मृदुतया हन्त हय्यङ्गवीनं
यन्मुष्णासि त्वमिह तदिदं किं यशोदा न पृच्छेत् ।
एषा पङ्क्तिः स्फुरति पदयोः शङ्खचक्राब्जरेखा
दूरेऽसि त्वं दयित ! विधिना हा हता मन्दभाग्या । २४ ॥

त्यक्त्वा चित्तं चिरपरिचितं[3] मां तमेवान्वगच्छत्
प्रत्यावृत्तिं न खलु लभते लोहपीताम्बुतुल्यम् ।
प्राणत्राणं क इह तनुयाद् दूरगः प्राणनाथः
कामः किंस्वित् प्रलयदहनः किं यमो राक्षसो वा ॥ २५ ॥

आधिक्षामामकृतसुकृतामुज्झितां बन्धुवर्गै-
रस्तं यातो दिनमणिरसावक्षमो वीक्षितुं माम् ।
घोरा[4] वाता ज्वलयति जगत् कोऽपि कालाग्निरिन्दु-
र्हन्ताकाण्डे[5] प्रलयसमयो यत्र नान्तो[6] निशायाः ॥ २६ ॥

१. कोऽप्ययं क्रूरकर्मा क. २. दूरतोऽपि ख. ग. ३. चिरपरिचितां ग. ४ घोरा क. ५. अकाले क. ६. नान्तं क.

रासक्रीडामिह हि पुळिने निर्ममे प्राङ् मुकुन्दो
वत्सान् वाप्यामिह सह जलं पाययामास गोभिः ।
भुङ्क्ते स्मान्नं स इह रुचितं वेष्टितोऽग्रे वयस्यै-
र्वत्सस्तैन्यं व्यतनुत पुनर्नूनमत्रैव धाता ॥ २७ ॥

तालाटव्यामिह खरतनुं ध्वस्तवान् धेनुकाख्यं
केशी प्राप्तस्त्विह हि निधनं केशवादश्वरूपः ।
अत्रारिष्टो धृतवृषवपू रामगोष्ठ्यां निरस्तो
देशे त्वस्मिन् व्रजमजगरग्रस्तमारक्षदार्यः ॥ २८ ॥

क्रीडन् गोपैरिह हि निधनं रोहिणेयात् प्रलम्बः
स्नातुं क्षीबस्त्विह हि यमुनां रौहिणेयश्चकर्ष ।
कालक्षेपं सुतनुरतनोदेवमाद्यैः प्रसङ्गै-
श्चित्तारूढैश्चिरमनुकृतैश्चास्य चित्रैश्चरित्रैः ॥ २९ ॥

आबिभ्राणा कपिशवसनं बर्हमापीडयन्ती
वक्षोमध्ये बहळतुळसीमालिकामादधाना ।
गोधूळीभिश्छुरितवदना वेणिकाबद्धकेशी
विष्णोः कृत्वा वपुरिति तदा वादयामास वेणुम् ॥ ३०

गङ्गे मा गा न चल यमुने याहि गोदावरि त्वं
हे कावेरि क्व चलसि पुरस्तुङ्गभद्रे निषीद ।
इत्थं सद्यः करकिसलये दण्डमुद्यम्य रम्यं
बाला शिञ्जद्वलयरशना मण्डलं सा चचाल ॥ ३१ ॥

१. सह रुचितरं क. २. स्वाप्तः, ३. चकर्त, ४. चलसि ख. ग.

भूत्वा पूर्वं प्रकृतिपुरुषौ भावयित्वा प्रपञ्चं
पश्चाद् दिव्यैर्भुवनविदितैः पालयित्वावतारैः ।
कुक्षौ न्यस्य प्रळयसमये कृत्यशेषे समाप्ते
क्षीराम्भोधौ भुजगशयने योगनिद्रां भजामि ॥ ३२ ॥

अङ्गस्यार्धे निवसति मम स्वैरमर्धेन्दुमौलि-
र्वेधा नाभीकमलकुहरे वक्षसि श्रीर्विशाले ।
देवाः सिद्धा अपि च मुनयो मां भजन्ते समन्ता-
दाविष्टेव प्रलेपितवती सेत्थमेवास्य वृत्तम् ॥ ३३ ॥

काले तस्मिन् मुररिपुकथां वीणया वाच्यमानां
शृण्वन् सप्तस्वरमुखरितां मोदमानान्तरात्मा ।
मूर्तं तादृक् तप इव जटी वल्कली चाक्षसूत्री
प्रादुर्भूतः सपदि पुरतः स्नातको नारदाख्यः ॥ ३४ ॥

तन्वी भर्तुश्चरितकथया विस्मयं नीयमाना
शिञ्जद्वीणारवमुदितया गाढगूढानुरागा ।
प्रत्युत्थाय प्रसभमुपसङ्गम्य पादौ ववन्दे
मुग्धा मूर्ध्नि प्रतिमुहुरधादञ्जलिं हृष्टचित्ता ॥ ३५ ॥

भूयो भूयः सुतनुरलुठत् पादधूल्यां महर्षेः
प्रक्षाल्याङ्घ्रिं तदुदककणैः प्रोक्षयामास चाङ्गम् ।
तस्यातिथ्यं रुचितमकरोत् सोपचारं वराङ्गी
पश्चादेनं विनयविनता पृच्छति स्मादरेण ॥ ३६ ॥

१. निरतति, २. प्रचलितवती, ३. पुरतो ज्ञानदो, ४. रवविंदितया क, ५गाढानुरागा ख. ६. प्रोक्षदङ्गं स्वकीयम ख.

अस्मद्धेतोर्हृदि समुदितात् पूर्णकारुण्यपूरा-
दन्यत्कार्यं तव न घटते श्रेयसां भाजनस्य ।
भाग्यं तावन्मम परिणतं दर्शनादद्य सद्यः
कस्माद्धेतोः कथय भगवन्नागतोऽथापि घोषम् ॥ ३७ ॥

किं वा वृत्तं कथय भगवन् साम्प्रतं तस्य विष्णोः
किं स्वस्त्यास्ते किमुत गणयेन्मादृशां प्रेमबन्धम् ।
किं वीक्षिष्ये पुनरपि मुखं मुग्धहासावलोकं
क्षुद्राः कामं व्रजयुवतयो दुर्लभस्तत्प्रसादः ॥ ३८ ॥

मा ताम्य त्वं तरलहृदये त्वां नयाम्यद्य कृष्णं
दत्तानुज्ञा भवसि रसिके देवकीनन्दनेन ।
तामित्युक्त्वा स तु निजतपोवैभवाद् वीतखेदां
निन्ये मार्गं प्रियतमकथां तत्र तत्र प्रशंसन् ॥ ३९

रामादेशादिह हि रजकस्याददे वस्त्रजालं
दत्तालेपामृजुमरचयत् कुब्जिकां काञ्चिदत्र ।
अस्मिन् देशे स तु कुवलयापीडसंज्ञं करीन्द्रं
कंसं मल्लानपि मृदितवान् मुष्टिचाणूरमुख्यान् ॥ ४०

कंसे जामातरि युधि मृते द्राग् जरासन्धनामा
चक्रेऽष्टादश[1] च समरान्[2] विंशदक्षौहिणीभिः ।
वन्यो मत्तद्विप इव तरुं यं पुनर्मल्लयुद्धे
द्वेधा चक्रे भुवनविजयी भीमसेनोऽभिमानी ॥ ४१ ॥

१. अष्टौ दश च ख. ग.   २. समरं क.

वैरूप्यं प्रागिह हि शिशुपालेच्छया प्राप रुक्मी
　कन्यामस्मै मणिमपि ददौ जाम्बवान् निर्जितोऽत्र ।
सिन्धौ सान्दीपनिसुतकृते गुर्वीनोऽत्र कृष्णः
　शङ्खाकारं दितिजमजयत् पाञ्चजन्यो यतोऽभूत् ॥ ४२ ॥

म्लेच्छाधीशस्त्विह हि मुचुकुन्देन राज्ञा निरस्तो
　यद्भीत्यासौ पुरमरचयद् द्वारकामब्धिमध्ये ।
काशीनाथस्त्विह हि विजितः पौण्ड्रको वासुदेवो
　ध्वस्तो वैदूरथ इह बलाद् दन्तवक्रश्च साल्वः । ४३ ॥

मायावत्या मकरहृदयादुद्धृतः पोषितः सन्
　स प्रद्युम्नस्त्विह हि समरे शम्बरं निर्ममन्थ ।
अस्माद्देशादनयदुषया साकमेवानिरुद्धं
　जित्वा युद्धे त्रिपुररिपुणा त्रायमाणं च बाणम् ॥ ४४ ॥

कृष्णं निन्दन्निह हि शिशुपालाह्वयः पाण्डवीये
　तस्मायुज्यं समुपगतवान् राजसूये स्वधाम्ना ।
यन्ता भूत्वा महति समरे पाण्डवानां प्रियार्थी
　व्यूढं राज्ञां व्यघटयदितो भीमसेनार्जुनाभ्याम् ॥ ४५ ।

इत्थं पुण्यां यदुपतिकथां वर्णयंस्तूर्णगामी
　दूरं दृष्टः कनकखचितैर्गोपुरैः सूच्यमानाम्
वातोद्वेल्लद्ध्वजपटकरैराह्वयन्तीमिवैनां
　मुग्धां मान्यः स मुनिरनयद् द्राक् पुरीं द्वारकाख्याम् ॥ ४६ ॥

१. बली क.　२. तस्मादभ्यं ख.　३. कनकरचितै क.

या प्रासादै रुचिररजतस्वर्णरत्नोपक्लृप्तै-
श्चन्द्रादित्यज्वलनविभवान् सन्ततं निन्दतीव ।
दूरे दृष्टाः कनककलशा यद्विमानाग्रलीना
हंसाकारं परमपुरुषं स्मारयन्त्यद्भुताङ्गम् ॥ ४७ ॥

यस्यां जित्वा नरकमसुरं ताः सहस्राणि कन्या-
स्तावत्सङ्ख्यां द्[1]धदुदवहत् षोडशाम्भोरुहाक्षः ।
यत्रासाते सुरतरुवरौ सत्यभामाप्रियार्थं
जित्वा शच्याः पतिमुपहृतौ तद्गृहोद्यानमध्ये ॥ ४८ ॥

अध्यारूढा नरकरिपुणा रौहिणेयोद्धवाभ्यां
यस्यामास्ते यदुभिरभितः सेविता सा सुधर्मा ।
यत्रोद्याने नरकसदनादाहृतो रत्नशैलः
कोशैः सार्कं विलसति चि[2]रान्मन्दराद्रिप्रसूतः ॥ ४९ ॥

मञ्जीरोत्थं मणिवलयजं हारकाञ्चीप्रसूतं
श्रुत्वा यत्र श्रवणसुभगं शिञ्जितं मञ्जुवाचाम् ।
वाप्यां वाप्यां कृतवसतयो राजहंसाः समन्तात्
कूजन्त्युच्चैर्मुदितमनसो बन्धुबुद्ध्योन्नतास्याः ॥ ५० ॥

अध्यारूढा मृदुलपवनैर्मन्दमन्दोल्यमानां
शाखाडोळां सुरविटपिनां तत्फलास्वादतृप्ताः ।
यत्रारामे शुकशकुनयः शारिकाश्लाघ्यमानाः
शंसन्त्युच्चैः [3]श्रवणसुभगाः श्रीनिवासस्य गा[4]थाः ॥ ५१

१. ददत्, २. चिरं ख. ३. श्रवणसुभगां, ४. गाथाम् क.

सिद्धैर्विद्याधरपरिवृढैः किन्नरैरप्सरोभिः
प्रक्रान्तायां प्रतिगृहमपि प्रेष्ठसङ्गीतगोष्ठ्याम् ।
मत्वा मेघध्वनिरिति मुहुर्मद्दळानां निनादं
यस्यां नृत्तं दधति शिखिनो मण्डलीकृत्य बर्हान् ॥ ५२ ॥

यत्सौधेषु प्रतिफलितया छायया विष्टपानां
रत्नस्तम्भाः खचितवपुषः प्रांशवोऽत्यन्तरम्याः ।
कृत्वा सम्यक् चिरमपचितिं प्राप्तसारूप्यसौख्या
विष्णोर्भक्ता इव विदधते विश्वरूपप्रकारम् ॥ ५३ ॥

सम्यक्-त्वष्ट्रा लिखितवपुषां यत्र पौराणिकानां
रामादीनां चरितमनिशं लक्ष्यमाणं च साक्षात् ।
सान्द्रस्नेहोच्छ्वसितपुळकः सन्ततानन्दपूर्णः
तत्कालीनं कलयति जनो निर्निमेषाक्षिपातः ॥ ५४ ॥

गायन्तीभिः सुरयुवतिभिः चामरैर्वीज्यमानं
ब्रह्मेन्द्राद्यैरमरनिकरैः कल्पपुष्पाभिषेकम् ।
कृष्णं दृष्ट्वा मणिमयगृहे रत्नसिंहासनस्थं
सान्द्रानन्दामृतजलनिधौ सा निमग्नाबतस्थे ॥ ५५ ॥

गेहे गेहे वरतनुरसौ वीक्षमाणा पतीन् स्वान्
पुत्रैः पौत्रैः प्रतिगृहमपि प्राप्तसङ्ख्यासहस्रान् ।
उद्गायन्तं मुनिवरममुं नारदं मानयन्ती
विष्णोः पार्श्वे सुचिरमवसद् विस्मिता तत्र दीर्घम् ॥ ५६

१. स्थगित, २. कथयति,

काव्याकारा स्तुतिरभिनवा कृष्णकेळीप्रशंसा
भक्त्या क्लृप्ता स्फुरदुपनिषद्वाक्यगूढार्थपूर्णा ।
पापच्छेत्त्री जगति पठतां शृण्वतां कर्णभूषा
मोदायास्तां मुरविजयिनो गोपिकोन्मादसंज्ञा* ॥ ५७ ॥

॥ इति उत्तरोन्मादः समाप्तः ॥

१. प्रसङ्गा क.

शृङ्गाराद्यैरभिनवरसैर्युक्तमप्यात्मबोधं
सन्तन्वानं परमपुरुषे भक्तिमापादयन्तम् ।
श्रुत्वा काव्यं विवशहृदयो गोपिकोन्मादसंज्ञं
नित्यं नित्यं पठितुमलिखत् चित्रभानुर्विचित्रम् ॥

अव्यान्मीलत्कळायद्युतिरहिरिपुपिञ्छोल्लसत्केशजालो
गोपीनेत्रोत्पलाराधितललितवपुर्गोपगोवृन्दवीतः ।
श्रीमद्वक्त्रारविन्दप्रतिहसितशशाङ्काकृतिः पीतवासा
देवोऽसौ वेणुवाद्यक्षपितजनधृतिर्देवकीनन्दनो वः ॥
एतत् श्लोकद्वयं ख मातृकायामधिकतया दृश्यते ।

# गोपिकोन्मादः

## श्लोकानुक्रमणी

## IN THE PRESS

1. Bhojanakutūhala (Dietitics) of Raghunātha Part II.
2. Sarasvatīkaṇṭhābharaṇa (Grammar) of Bhoja with the commentary Hṛdayahāriṇi of Daṇḍanātha Nārāyaṇa Part V.
3. Tripuradahana (Kāvya) of Vāsubhaṭṭatiri with the commentary of Paṅkajākṣa.
4. Sītārāghava (Nāṭaka) of Rāmapāṇivāda.
5. Harṣacarita with the commentary Marmāvabodhini by Raṅganātha.
6. Āryabhaṭīya (Jyotiṣa) with the commentary of Gargyakeraḷa Nīlakaṇṭhasomasutvan.
7. Horāśāstra (Jyotiṣa) with the commentary (2nd edition)
8. Bhramarakāhali (Nāṭaka) of Prabhākara

## READY FOR THE PRESS

1. Aṣṭāṅgahṛdaya with the commentary Hṛdayabodhika of Śrīdāsapaṇḍita Part III.
2. Tantrasamuccaya (Tantra) by Nārāyaṇa with the commentaries Vimarśinī and Vivaraṇa Part III.
3. Pūrvabhāratacampu (Kāvya) of mānaveca with the commentary by Kṛṣṇa.
4. Tantrasaṅgraha (Jyotiṣa) of Nīlakaṇṭha with commentary.
5. Aitareya Āraṇyaka (Veda) with the commentary Mokṣapradā of Ṣaḍguruśiṣya.
6. Karaṇottama (Jyotiṣa) of Acyuta with commentary.

## UNDER PREPARATION

1. Aitareyabrāhmaṇa (Veda) Part IV with the commentary Sukhaprada of Ṣaḍguruśiṣya.
2. Kalaśacandrikā (Tantra).

